॥ श्रीगुरुसहस्रनामस्तोत्रम् ॥
॥ ॐ गं गणपतये नमः ॥
॥ श्रीगुरवे नमः ॥
॥ श्रीपरमगुरवे नमः ॥
॥ श्रीपरात्परगुरवे नमः ॥
॥ श्रीपरमेष्ठिगुरवे नमः ॥
॥ ॐ श्रीपरमात्मने नमः ॥
॥ श्रीशिवोक्तं श्रीहरिकृष्णविरचितम् ॥

॥ अथ श्रीगुरुसहस्रनामस्तोत्रम् ॥
कैलासशिखरासीनं चन्द्रखण्डविराजितम् ।
पप्रच्छ विनयाद्भक्त्या गौरी नत्वा वृषध्वजम् ॥ १॥
॥ श्रीदेव्युवाच ॥
भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
केनोपायेन च कलौ लोकार्तिर्नाशमेष्यति ॥ २॥
तन्मे वद महादेव यदि तेऽस्ति दया मयि ।

॥ श्रीमहादेव उवाच ॥
अस्ति गुह्यतमं त्वेकं ज्ञानं देवि सनातनम् ॥ ३॥
अतीव च सुगोप्यं च कथितुं नैव शक्यते ।
अतीव मे प्रियासीति कथयामि तथापि ते ॥ ४॥
सर्वं ब्रह्ममयं ह्येतत्संसारं स्थूलसूक्ष्मकम् ।
प्रकृत्या तु विना नैव संसारो ह्युपपद्यते ॥ ५॥
तस्मात्तु प्रकृतिर्मूलकारणं नैव दृश्यते ।
रूपाणि बहुसङ्ख्यानि प्रकृतेः सन्ति मानिनि ॥ ६॥
तेषां मध्ये प्रधानं तु गुरुरूपं मनोरमम् ।
विशेषतः कलियुगे नराणां भुक्तिमुक्तिदम् ॥ ७॥
तस्योपासकाश्चैव ब्रह्माविष्णुशिवादयः ।
सूर्यश्चन्द्रश्च वरुणः कुबेरोऽग्निस्तथापराः ॥ ८॥
दुर्वासाश्च वसिष्ठश्च दत्तात्रेयो बृहस्पतिः ।
बहुनात्र किमुक्तेन सर्वेदेवा उपासकाः ॥ ९॥
गुरूणां च प्रसादेन भुक्तिमुक्त्यादिभागिनः ।
संवित्कल्पं प्रवक्ष्यामि सच्चिदानन्दलक्षणम् ॥ १०॥
यत्कल्पाराधनेनैव स्वात्मानन्दो विराजते ।
मेरोरुत्तरदेशे तु शिलाहैमावती पुरी ॥ ११॥
दशयोजनविस्तीर्णा दीर्घषोडशयोजना ।
वररत्नैश्च खचिता अमृतं स्रवते सदा ॥ १२॥
सोत्थिता शब्दनिर्मुक्ता तृणवृक्षविवर्जिता ।

तस्योपरि वरारोहे संस्थिता सिद्धमूलिका ॥ १३॥
वेदिकाजननिर्मुक्ता तन्नदीजलसंस्थिता ।
वेदिकामध्यदेशे तु संस्थितं च शिवालयम् ॥ १४॥
हस्ताष्टकसुविस्तारं समन्ताच्च तथैव च ।
तस्योपरि च देवेशि ह्युपविष्टो ह्यहं प्रिये ॥ १५॥
दिव्याब्दवर्षपञ्चाशत्समाधौ संस्थितो ह्यहम् ।
महागुरुपदे दृष्टं गूढं कौतुहलं मया ॥ १६॥

विनियोगः-
ॐ अस्य श्रीगुरुसहस्रनाममालामन्त्रस्य
श्रीसदाशिवऋषिः
नानाविधानि छन्दांसि श्रीगुरुर्देवता श्रीगुरुप्रीत्यर्थे
सकलपुरुषार्थसिद्ध्यर्थे
श्रीगुरुसहस्रनाम जपे विनियोगः ।

॥ अथाङ्गन्यासः ॥
श्रीसदाशिवऋषये नमः शिरसि ॥
श्रीनानाविधछन्देभ्यो नमः मुखे ॥
श्रीगुरुदेवतायै नमः हृदये ॥
श्री हं बीजाय नमः गुह्ये ॥
श्री शं शक्तये नमः पादयोः ॥
श्री क्रौं कीलकाय नमः सर्वाङ्गे ॥

॥ अथ गुरुगायत्रीमन्त्रः ॥
ॐ गुरुदेवाय विद्महे परमगुरवे च धीमहि
तन्नो पुरुषः प्रचोदयात् ॥
॥ इति गुरुगायत्रीमन्त्रः ॥

॥ अथ करन्यासः ॥
ॐ सदाशिवगुरवे नमः अङ्गुष्ठाभ्यां नमः ।
ॐ विष्णुगुरवे नमः तर्जनीभ्यां नमः ।
ॐ ब्रह्मगुरवे नमः मध्यमाभ्यां नमः ।
ॐ गुरु इन्द्राय नमः अनामिकाभ्यां नमः ।
ॐ गुरुसकलदेवरूपिणे नमः कनिष्ठिकाभ्यां नमः ।
ॐ गुरुपञ्चतत्त्वात्मने नमः करतलकरपृष्ठाभ्यां नमः ।

॥ अथ हृदयादिन्यासः ॥
ॐ सदाशिवगुरवे नमः हृदयायनमः ।

ॐ विष्णुगुरवे नमः शिरसे स्वाहा ।
ॐ ब्रह्मगुरवे नमः शिखायै वषट् ।
ॐ गुरु इन्द्राय नमः नेत्रत्रयाय वौषट् ।
ॐ गुरुसकलदेवरूपिणे नमः कवचाय हुम् ।
ॐ गुरुपञ्चतत्त्वात्मने नमः अस्त्राय फट् ।

॥ अथ ध्यानम् ॥
हंसाभ्यां परिवृत्तपत्रकमलैर्दिव्यैर्जगत्कारणै-
र्विश्वोत्कीर्णमनेकदेहनिलयं स्वच्छन्दमात्मेच्छया ।
तत्तद्योग्यतया स्वदेशिकतनुं भावैकदीपाङ्कुरम् ।
प्रत्यक्षाक्षरविग्रहं गुरुपदं ध्यायेद्द्विबाहुं गुरुम् ॥ १७॥
विश्वं व्यापितमादिदेवममलं नित्यं परन्निष्कलम्
नित्योत्फुल्लसहस्रपत्रकमलैर्नित्याक्षरैर्मण्डपैः ।
नित्यानन्दमनन्तपूर्णमखिलन्तद्ब्रह्म नित्यं स्मरे-
दात्मानं स्वमनुप्रविश्य कुहरे स्वच्छन्दतः सर्वगम् ॥ १८॥
॥ इति ध्यानम् ॥

॥ अथ मन्त्रः ॥
॥ ॐ ऐं ह्रीं श्रीं गुरवे नमः ॥
॥ इति मन्त्रः ॥

त्वं हि मामनुसन्धेहि सहस्रशिरसम्प्रभुम् ।
तदा मुखेषु मे न्यस्तं सहस्रं लक्ष्यते स्तदा ॥ १९॥
इदं विश्वहितार्थाय रसनारङ्गगोचरम् ।
प्रकाशयित्वा मेदिन्यां परमागमसम्मताम् ॥ २०॥
इदं शठाय मूर्खाय नास्तिकाय प्रकीर्तने ।
असूयोपहतायापि न प्रकाश्यं कदाचन ॥ २१॥
विवेकिने विशुद्धाय वेदमार्गानुसारिणे ।
आस्तिकायात्मनिष्ठाय स्वात्मन्यविकृताय च ॥ २२॥
गुरुनामसहस्रं ते कृतधीरुदिते जये ।
भक्तिगम्यस्त्रयीमूर्तिर्भासक्तो वसुधाधिपः ॥ २३॥
देवदेवो दयासिन्धुर्देवदेवशिखामणिः ।
सुखाभावः सुखाचारः शिवदो मुदिताशयः ॥ २४॥
अविक्रियः क्रियामूर्तिरध्यात्मा च स्वरूपवान् ।
सृष्ट्यामलक्ष्यो भूतात्मा धर्मी यात्रार्थचेष्टितः ॥ २५॥
अन्तर्यामी कालरूपः कालावयविरूपिणः ।
निर्गुणश्च कृतानन्दो योगी निद्रानियोजकः ॥ २६॥
महागुणान्तर्निक्षिप्तः पुण्यार्णवपुरात्मवान् ।

निरवद्यः कृपामूर्तिर्न्यायवाक्यनियामकः ॥ २७॥
अदृष्टचेष्टः कूटस्थो धृतलौकिकविग्रहः ।
महर्षिमानसोल्लासो महामङ्गलदायकः ॥ २८॥
सन्तोषितः सुरव्रातः साधुचित्तप्रसादकः ।
शिवलोकाय निर्देष्टा जनार्दनश्च वत्सलः ॥ २९॥
स्वशक्त्युद्घाटिताशेषकपाटः पितृवाहनः ।
शेषोरगफणाच्छत्रः शोषोक्त्यास्यसहस्रकः ॥ ३०॥
कृतात्मविद्याविन्यासो योगमायाग्रसम्भवः ।
अञ्जनस्निग्धनयनः पर्यायाङ्कुरितस्मितः ॥ ३१॥
लीलाक्षस्तरलालोकस्त्रिपुरासुरभञ्जनः ।
द्विजोदितस्वस्त्ययनो मन्त्रपूतो जलाप्लुतः ॥ ३२॥
प्रशस्तनामकरणो जातुचङ्क्रमणोत्सुकः ।
व्यालविचूलिकारत्नघोषो घोषप्रहर्षणः ॥ ३३॥
सन्मुखः प्रतिबिम्बार्थी ग्रीवाव्याघ्रनखोज्ज्वलः ।
पङ्कानुलेपरुचिरो मांसलोरुकटीतलः ॥ ३४॥
दृष्टजानुकरद्वन्द्वः प्रतिबिम्बानुकारकृत् ।
अव्यक्तवर्णव्यावृत्तिः स्मितलक्ष्यरदोद्गमः ॥ ३५॥
धात्रीकरसमालम्बी प्रस्खलच्चित्रचङ्क्रमः । ??
क्षेमणी क्षेमणाप्रीतो वेणुवाद्यविशारदः ॥ ३६॥
नियुद्धलीलासंहृष्टः कण्ठानुकृतकोकिलः ।
उपात्तहंसगमनः सर्वसत्त्वरुतानुकृत् ॥ ३७॥
मनोज्ञः पल्लवोत्तंसः पुष्पस्वेच्छात्मकुण्डलः ।
मञ्जुसञ्जितमञ्जीरपादः काञ्चनकङ्कणः ॥ ३८॥
अन्योन्यस्पर्शनक्रीडापटुः परमकेतनः ।
प्रतिध्वानप्रमुदितः शाखाचतुरचङ्क्रमः ॥ ३९॥
ब्रह्मत्राणकरो धातृस्तुतः सर्वार्थसाधकः ।
ब्रह्मब्रह्ममयोऽव्यक्तः तेजास्तव्यः सुखात्मकः ॥ ४०॥
निरुक्तो व्याकृतो व्यक्तिर्निरालम्बविभावनः ।
प्रभविष्णुरतन्द्रीको देववृक्षादिरूपधृक् ॥ ४१॥
आकाशः सर्वदेवादिरणीयस्थूलरूपवान् । ??
व्याप्याव्याप्यकृताकर्ता विचाराचारसम्मतः ॥ ४२॥
छन्दोमयः प्रधानात्मा मूर्तो मूर्तद्वयाकृतिः ।
अनेकमूर्तिरक्रोधः परात्परपराक्रमः ॥ ४३॥
सकलावरणातीतः सर्वदेवमहेश्वरः ।
अनन्यविभवः सत्यरूपः स्वर्गेश्वरार्चितः ॥ ४४॥ ?
महाप्रभावज्ञानज्ञः पूर्वगः सकलात्मजः ।
स्मितेक्षाहर्षितो ब्रह्मा भक्तवत्सलवाक्प्रियः ॥ ४५॥
ब्रह्मानन्दोदधौताङ्घ्रिः लीलावैचित्र्यकोविदः ।

विलाससकलस्मेरो गर्वलीलाविलोकनः ॥ ४६॥
अभिव्यक्तदयात्मा च सहजार्धस्तुतो मुनिः ।
सर्वेश्वरः सर्वगुणः प्रसिद्धः सात्वतर्षभः ॥ ४७॥
अकुण्ठधामा चन्द्रार्कदृष्टिराकाशनिर्मलः ।
अभयो विश्वतश्चक्षुस्तथोत्तमगुणप्रभुः ॥ ४८॥
अहमात्मा मरुत्प्राणः परमात्माऽऽद्यशीर्षवान् ।
दावाग्निभीतस्य गुरोर्गोप्ता दावानिग्ननाशनः ॥ ४९॥ ??
मुञ्जाटव्यग्निशमनः प्रावृट्कालविनोदवान् । ?
शिलान्यस्तान्नभुग्जातसौहित्यश्चाङ्गुलाशनः ॥ ५०॥ ??
गीतास्फीतसरित्पूरो नादनर्तितबर्हिणः ।
रागपल्लवितस्थाणुर्गीतानमितपादपः ॥ ५१॥
विस्मारिततृणस्याग्रग्रासीमृगविलोभनः । ??
व्याघ्रादिहिंस्रजन्तुवैरहर्ता सुगायनः ॥ ५२॥ ??
निष्यन्दध्यानब्रह्मादिवीक्षितो विश्ववन्दितः ।
शाखोत्कीर्णशकुन्तौघछत्रास्थितबलाहकः ॥ ५३॥
अस्पन्दः परमानन्दचित्रायितचराचरः ।
मुनिज्ञानप्रदो यज्ञस्तुतो वासिष्ठयोगकृत् ॥ ५४॥ ?
शत्रुप्रोक्तक्रियारूपः शत्रुयज्ञनिवारणः ।
हिरण्यगर्भहृदयो मोहवृत्तिनिवर्तकः ॥ ५५॥ ?
आत्मज्ञाननिधिर्मेधा कीशस्तन्मात्ररूपवान् । ?? kesha
?? kIsha = monkey, tanmAtrarUpavAn kIshaH – monkey having assumed a very small size as Hanuman in Lanka while searching for Seeta – wild imagination?

इन्द्राग्निवदनः कालनाभः सर्वागमस्तुतः ॥ ५६॥
तुरीयः सत्त्वधीः साक्षी द्वन्द्वारामात्मदूरगः ।
अज्ञातपारो विश्वेशः अव्याकृतविहारवान् ॥ ५७॥
आत्मप्रदीपो विज्ञानमात्रात्मा श्रीनिकेतनः ।
पृथ्वी स्वतःप्रकाशात्मा हृद्यो यज्ञफलप्रदः ॥ ५८॥
गुणग्राही गुणद्रष्टा गूढस्वात्मानुभूतिमान् ।
कविर्जगद्रूपद्रष्टा परमाक्षरविग्रहः ॥ ५९॥
प्रपन्नपालनो मालामनुर्ब्रह्मविवर्धनः ।
वाक्यवाचकशक्त्यार्थः सर्वव्यापी सुसिद्धिदः ॥ ६०॥
स्वयम्प्रभुरनिर्विघ्यः स्वप्रकाशश्चिरन्तनः ।
नादात्मा मन्त्रकोटीशो नानावादानुरोधकः ॥ ६१॥
कन्दर्पकोटिलावण्यः परार्थैकप्रयोजकः ।
अभयीकृतदेवौघः कन्यकाबन्धमोचनः ॥ ६२॥
क्रीडारत्नबलीहर्ता वरुणच्छत्रशोभितः ।
शक्राभिवन्दितः शक्रजननीकुण्डलप्रदः ॥ ६३॥

यशस्वी नाभिराद्यन्तरहितः सत्कथाप्रियः ।
अदितिप्रस्तुतस्तोत्रो ब्रह्माद्युत्कृष्टचेष्टितः ॥ ६४॥
पुराणः संयमी जन्म ह्यधिपः शशकोऽर्थदः ।
ब्रह्मगर्भपरानन्दः पारिजातापहारकृत् ॥ ६५॥
पौण्ड्रिकप्राणहरणः काशीराजनिषूदनः ।
कृत्यागर्वप्रशमनो विचकृत्यागर्वदर्पहा ॥ ६६॥ ???
कंसविध्वंसनः शान्तजनकोटिभयार्दनः ।
मुनिगोप्ता पितृवरप्रदः सर्वानुदीक्षितः ॥ ६७॥ ?
कैलासयात्रासुमुखो बदर्य्याश्रमभूषणः ।
घण्टाकर्णक्रियादोग्धातोषितो भक्तवत्सलः ॥ ६८॥ ?
मुनिवृन्दातिथिर्ध्येयो घण्टाकर्णवरप्रदः ।
तपश्चर्या पश्चिमाद्यो श्वासो पिङ्गजटाधरः ॥ ६९॥
प्रत्यक्षीकृतभूतेशः शिवस्तोता शिवस्तुतः ।
गुरुः स्वयं वरालोककौतुकी सर्वसम्मतः ॥ ७०॥
कलिदोषनिराकर्त्ता दशनामा दृढव्रतः ।
अमेयात्मा जगत्स्वामी वाग्मी चैद्यशिरोहरः ॥ ७१॥
गुरुश्च पुण्डरीकाक्षो विष्णुश्च मधुसूदनः ।
गुरुमाधवलोकेशो गुरुवामनरूपधृक् ॥ ७२॥
विहितोत्तमसत्कारो वासवाप्तरिपु इष्टदः । ? वासवात्परितुष्टितः
उत्तङ्कहर्षदात्मा यो दिव्यरूपप्रदर्शकः ॥ ७३॥
जनकावगतस्तोत्रो भारतः सर्वभावनः ।
असोढ्ययादवोद्रेको विहितात्परिपूजितः ॥ ७४॥ ??
soDhya – unable to bear; yAdavodrekaH – excessive predominance of Yadavas
समुद्रक्षपिताश्चर्यमुसलो वृष्णिपुङ्गवः ।
मुनिशार्दूलपद्माङ्कः सनादित्रिदशार्दितः ॥ ७५॥ ??
गुरुप्रत्यवहारोक्तः स्वधामगमनोत्सुकः ।
प्रभासालोकनोद्युक्तो नानाविधनिमित्तकृत् ॥ ७६॥
सर्वयादवसंसेव्यः सर्वोत्कृष्टपरिच्छदः ।
वेलाकाननसञ्चारी वेलानीलहतश्रमः ॥ ७७॥
कालात्मा यादवानन्तस्तुतिसन्तुष्टमानसः ।
द्विजालोकनसन्तुष्टः पुण्यतीर्थमहोत्सवः ॥ ७८॥ ??
सत्काराह्लादिताशेषभूसुरो भूसुरप्रियः ।
पुण्यतीर्थप्लुतः पुण्यः पुण्यदस्तीर्थपावनः ॥ ७९॥
विप्रसात्स्वकृतः कोटिशतकोटिसुवर्णदः ।
स्वमायामोहिताशेषरुद्रवीरो विशेषजित् ॥ ८०॥
ब्रह्मण्यदेवः श्रुतिमान् गोब्राह्मणहिताय च ।
वरशीलः शिवारम्भः स्वसंविज्ञातमूर्त्तिमान् ॥ ८१॥
स्वभावभद्रः सन्मित्रः सुशरण्यः सुलक्षणः ।

सामगानप्रियो धर्मो धेनुवर्मतमोऽव्ययः ॥ ८२॥ ??
चतुर्युगक्रियाकर्त्ता विश्वरूपप्रदर्शकः ।
अकालसन्ध्याघटनः चक्राङ्कितश्च भास्करः ॥ ८३॥
दुष्टप्रमथनः पार्थप्रतिज्ञाप्रतिपालकः ।
महाधनो महावीरो वनमालाविभूषणः ॥ ८४॥
सुरः सूर्यो मृकण्डश्च भास्करो विश्वपूजितः ।
रविस्तमोहा वह्निश्च वाडवो वडवानलः ॥ ८५॥
दैत्यदर्पविनाशी च गरुडो गरुडाग्रजः ।
प्रपञ्ची पञ्चरूपश्च लतागुल्मश्च गोपतिः ॥ ८६॥
गङ्गा च यमुनारूपी गोदा वेत्रावती तथा ।
कावेरी नर्मदा तापी गण्डकी सरयू रजः ॥ ८७॥
राजसस्तामसः सात्त्वी सर्वाङ्गी सर्वलोचनः ।
मुदामयोऽमृतमयो योगिनीवल्लभः शिवः ॥ ८८॥
बुद्धो बुद्धिमतां श्रेष्ठो विष्णुर्जिष्णुः शचीपतिः ।
सृष्टिचक्रधरो लोको विलोको मोहनाशनः ॥ ८९॥
रवो रावो रवो रावो बलो बालबलाहकः ।
शिवरुद्रो नलो नीलो लाङ्गली लाङ्गलाश्रयः ॥ ९०॥
पारकः पारकी सार्वी वटपिप्पलकाकृतीः । ??
म्लेच्छहा कालहर्ता च यशो ज्ञानं च एव च ॥ ९१॥
अच्युतः केशवो विष्णुर्हरिः सत्यो जनार्दनः ।
हंसो नारायणो लीलो नीलो भक्तपरायणः ॥ ९२॥
मायावी वल्लभगुरुर्विरामो विषनाशनः ।
सहस्रभानुर्महाभानुर्वीरभानुर्महोदधिः ॥ ९३॥
समुद्रोऽब्धिरकूपारः पारावारसरित्पतिः ।
गोकुलानन्दकारी च प्रतिज्ञाप्रतिपालकः ॥ ९४॥
सदारामः कृपारामो महारामो धनुर्धरः ।
पर्वतः पर्वताकारो गयो गेयो द्विजप्रियः ॥ ९५॥
कमलाश्वतरो रामो, भव्यो यज्ञप्रवर्त्तकः ।
द्यौर्दिवौ दिवओ दिव्यौ भावी भावभयापहा ॥ ९६॥
पार्वतीभावसहितो भर्त्ता लक्ष्मीविलासवान् ।
विलासी सहसी सर्वो गुर्वी गर्वितलोचनः ॥ ९७॥
मायाचारी सुधर्मज्ञो जीवनो जीवनान्तकः ।
यमो यमारिर्यमनो यामी यामविधायकः ॥ ९८॥
ललिता चन्द्रिकामाली माली मालाम्बुजाश्रयः ।
अम्बुजाक्षो महायक्षो दक्षश्चिन्तामणिः प्रभुः ॥ ९९॥
मेरोश्चैव च केदारबदर्य्याश्रममागतः ।
बदरीवनसन्तप्तो व्यासः सत्यवती सुतः ॥ १००॥
भ्रमरारिनिहन्ता च सुधासिन्धुविधूदयः ।

चन्द्रो रविः शिवः शूली चक्री चैव गदाधरः ॥ १०१॥
सहस्रनाम च गुरोः पठितव्यं समाहितैः ।
स्मरणात्पापराशीनां खण्डनं मृत्युनाशनम् ॥ १०२॥
गुरुभक्तप्रियकरं महादारिद्र्यनाशनम् ।
ब्रह्महत्या सुरापानं परस्त्रीगमनं तथा ॥ १०३॥
परद्रव्यापहरणं परदोषसमन्वितम् ।
मानसं वाचिकं कायं यत्पापं पापसम्भवम् ॥ १०४॥
सहस्रनामपठनात्सर्वं नश्यति तत्क्षणात् ।
महादारिद्र्ययुक्तो यो गुरुर्वा गुरुभक्तिमान् ॥ १०५॥
कार्तिक्यां यः पठेद्रात्रौ शतमष्टोत्तरं पठेत् ।
सुवर्णाम्बरधारी च सुगन्धपुष्पचन्दनैः ॥ १०६॥
पुस्तकं पूजयित्वा च नैवेद्यादिभिरेव च ।
महामायाङ्कितो धीरो पद्ममालाविभूषणः ॥ १०७॥
प्रातरष्टोत्तरं देवि पठन्नाम सहस्रकम् ।
चैत्रशुक्ले च कृष्णे च कुहुसङ्क्रान्तिवासरे ॥ १०८॥
पठितव्यं प्रयत्नेन त्रैलोक्यं मोहयेत्क्षणात् ।
मुक्तानाम्मालया युक्तो गुरुभक्त्या समन्वितः ॥ १०९॥
रविवारे च शुक्रे च द्वादश्यां श्राद्धवासरे ।
ब्राह्मणान्भोजयित्वा च पूजयित्वा विधानतः ॥ ११०॥
पठन्नामसहस्रं च ततः सिद्धिः प्रजायते ।
महानिशायां सततं गुरौ वा यः पठेत्सदा ॥ १११॥
देशान्तरगता लक्ष्मीः समायाति न संशयः ।
त्रैलोक्ये च महालक्ष्मीं सुन्दर्यः काममोहिताः ॥ ११२॥
मुग्धाः स्वयं समायान्ति गौरवाच्च भजन्ति ताः ।
रोगार्त्तो मुच्यते रोगात्बद्धो मुच्येत बन्धनात् ॥ ११३॥
गुर्विणी विन्दते पुत्रं कन्या विन्दति सत्पतिम् ।
राजानो वशतां यान्ति किम्पुनः क्षुद्रमानुषाः ॥ ११४॥
सहस्रनामश्रवणात्पठनात्पूजनात्प्रिये ।
धारणात्सर्वमाप्नोति गुरवो नात्र संशयः ॥ ११५॥
यः पठेद्गुरुभक्तः सन् स याति परमं पदम् ।
कृष्णेनोक्तं समासाद्य मया प्रोक्तं पुरा शिवम् ॥ ११६॥
नारदाय मया प्रोक्तं नारदेन प्रकाशितम् ।
मया त्वयि वरारोहे! प्रोक्तमेतत्सुदुर्लभम् ॥ ११७॥
शठाय पापिने चैव लम्पटाय विशेषतः ।
न दातव्यं न दातव्यं न दातव्यं कदाचन ॥ ११८॥
देयं दान्ताय शिष्याय गुरुभक्तिरताय च ।
गोदानं ब्रह्मयज्ञश्च वाजपेयशतानि च ॥ ११९॥
अश्वमेधसहस्रस्य पठतश्च फलं लभेत् ।

मोहनं स्तम्भनं चैव मारणोच्चाटनादिकम् ॥ १२०॥
यद्यद्वाञ्छति चित्ते तु प्राप्नोति गुरुभक्तितः ।
एकादश्यां नरः स्नात्वा सुगन्धद्रव्यसंयुतः ॥ १२१॥
आहारं ब्राह्मणे दत्त्वा दक्षिणां स्वर्णभूषणम् ।
आरम्भकर्तासौ सर्वं सर्वमाप्नोति मानवः ॥ १२२॥
शतावर्त्तं सहस्रञ्च यः पठेद्गुरवे जनाः ।
गुरुसहस्रनामस्य प्रसादात्सर्वमाप्नुयात् ॥ १२३॥
यद्गेहे पुस्तकं देवि पूजितं चैव तिष्ठति ॥
न मारी न च दुर्भिक्षं नोपसर्गं भयं क्वचित् ॥ १२४॥
सर्पादिभूतयक्षाद्या नश्यन्ते नात्र संशयः ।
श्रीगुरुर्वा महादेवि! वसेत्तस्य गृहे तथा ॥ १२५॥
यत्र गेहे सहस्रं च नाम्नां तिष्ठति पूजितम् ।
श्रीगुरोः कृपया शिष्यो ब्रह्मसायुज्यमाप्नुयात् ॥ १२६॥

॥ इति श्रीहरिकृष्णविनिर्मिते बृहज्ज्योतिषार्णवेऽष्टमे
धर्मस्कन्धे सम्मोहनतन्त्रोक्तश्रीगुरुसहस्रनामस्तोत्रम् ॥